vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam - Value Education - Technology

# मङ्गलम्

- लक्ष्मीं तनोतु नितरामितरानपेक्षम्
- अङ्घ्रिद्वयं निगम-शाखि-शिखा-प्रवालम् ।
- हैरम्बमम्बुरुह-डम्बर-चौर्य-निघ्नम्
- विघ्नाद्रि-भेद-शतधार-धुरन्धरं नः ॥

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam - Value Education - Technology

# पुनरावर्तनम्

- गङ्गावतरणम्
  - सगरः – केशिनी, सुमतिः
  - तपसा दायादसम्पदं प्राप – केशिन्याः सुतः असमञ्जः, सुमत्याः ६०,००० पुत्राः
  - अश्वमेधः – अश्वः इन्द्रेण अपहृतः
  - अश्वमन्विष्यन्तः सगरपुत्राः पृथ्वीं खनन्तः पातालं प्राप्तवन्तः
  - तत्र कपिलस्य कोपाग्निना दग्धाः सागराः

# असमञ्जसुतं पौत्रमंशुमन्तमथाब्रवीत्।
# सप्तिं हृत्वा समाधत्तां सप्ततन्तुं भवानिति॥७१॥

- असमञ्ज-सुतम्, पौत्रम्, अंशुमन्तम्, अथ, अब्रवीत्, सप्तिम्, हृत्वा, समाधत्ताम्, सप्त-तन्तुम्, भवान्, इति
- अब्रवीत् = उक्तवान्
- कः अब्रवीत्? [सगरः]
- कम् अब्रवीत्? पौत्रम् = पुत्रस्य पुत्रम्, अंशुमन्तम् = अंशुमन्तनामकम्
- कीदृशम् अंशुमन्तम्? असमञ्जसुतम् = केशिनीपुत्रस्य असमञ्जस्य तनयम्

# असमञ्जसुतं पौत्रमंशुमन्तमथाब्रवीत्।
# सप्तिं हृत्वा समाधत्तां सप्ततन्तुं भवानिति॥७१॥

- कदा अब्रवीत्? अथ = अश्वमन्वेष्टुं प्रस्थितेषु सौमतेयेषु अनिवृत्तेषु
- किम् इति अब्रवीत्? समाधत्ताम् = समापयतु
- कं समाधत्ताम्? सप्ततन्तुम् = यज्ञम्, अश्वमेधम्
- कः समाधत्ताम्? भवान् = त्वम्
- किं कृत्वा समाधत्ताम्? हृत्वा = आनीय
- कं हृत्वा? सप्तिम् = अश्वम्

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education

# असमञ्जसुतं पौत्रमंशुमन्तमथाब्रवीत्।
# सप्तिं हृत्वा समाधत्तां सप्ततन्तुं भवानिति॥७१॥

- अन्वयः – अथ असमञ्जसुतं पौत्रम् अंशुमन्तम् अब्रवीत् – “भवान् सप्तिं हृत्वा सप्ततन्तुं समाधत्ताम्” इति ।
- तात्पर्य्यम् – अश्वम् अन्वेष्टुं प्रस्थितानां पुत्राणाम् अनागमनेन चिन्तितः सगरः “भवान् अश्वम् आनीय यज्ञसमाप्तिं साधयतु” इति पुत्रस्य असमञ्जस्य तनयम् अंशुमन्तम् उक्तवान् ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education - Technology

# असमञ्जसुतं पौत्रमंशुमन्तमथाब्रवीत्।
# सप्तिं हृत्वा समाधत्तां सप्ततन्तुं भवानिति॥७१॥

- सप्तिम् – इकारान्तः, पुं, २.१ । “वाजि-वाह-अर्व-गन्धर्व-हय-सैन्धव-सप्तयः” (अमरः)
- समाधत्ताम् – सम् + आ + “डुधाञ् धारणपोषणयोः” – आत्मनेपदे लोट्, प्रथम.१
- सप्ततन्तुम् – सप्तभिः गायत्र्यादिभिः तन्यते इति सप्ततन्तुः = क्रतुः । “यज्ञः सवोऽध्वरो यागः सप्ततन्तुः मखः क्रतुः” (अमरः)

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education

# सोऽपि गत्वा बिलं तत्र दृष्ट्वा भस्मीकृतान्पितॄन्।
# साश्रुस्तेभ्योऽञ्जलिं दित्सुश्चरँल्लेभे तुरङ्गमम् ॥७२॥

- सः, अपि, गत्वा, बिलम्, तत्र, दृष्ट्वा, भस्मीकृतान्, पितॄन्, स-अश्रुः, तेभ्यः, अञ्जलिम्, दित्सुः, चरन्, लेभे, तुरङ्गमम्
- लेभे = प्राप्तवान्
- कं लेभे? तुरङ्गमम् = अश्वम्
- कः लेभे? सः = अंशुमान् अपि

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education

# सोऽपि गत्वा बिलं तत्र दृष्ट्वा भस्मीकृतान्पितॄन्।
# साश्रुस्तेभ्योऽञ्जलिं दित्सुश्चरंल्लेभे तुरङ्गमम्॥७२॥

- किं कृत्वा? गत्वा = यात्वा
- कुत्र गत्वा? बिलम् = सगरैः निखातं गर्तम्
- पुनः किं कृत्वा लेभे? दृष्ट्वा = वीक्ष्य
- कान् दृष्ट्वा? पितॄन् = पितृव्यान् सौमतेयान्
- कथम्भूतान् पितॄन्? भस्मीकृतान् = दग्धान्
- कुत्र दृष्ट्वा? तत्र = पाताले

Vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam - Value Education

सोऽपि गत्वा बिलं तत्र दृष्ट्वा भस्मीकृतान्पितॄन्।
साश्रुस्तेभ्योऽञ्जलिं दित्सुश्चरंल्लेभे तुरङ्गमम्॥७२॥

- किं कुर्वन् लेभे? चरन् = अटन्
- कथम्भूतः चरन्? साश्रुः = बाष्पसहितः
- पुनः कथम्भूतः सन् चरन्? दित्सुः = प्रदातुम् इच्छन्
- कं दित्सुः? अञ्जलिम् = तर्पणम्
- केभ्यः अञ्जलिं दित्सुः? तेभ्यः = मृतेभ्यः पितृभ्यः

vyoma ॥ वाचं धेनुमुपासीत॥ Samskritam - Value Education

# सोऽपि गत्वा बिलं तत्र दृष्ट्वा भस्मीकृतान्पितॄन्।
# साश्रुस्तेभ्योऽञ्जलिं दित्सुश्चरंल्लेभे तुरङ्गमम्॥७२॥

- अन्वयः – सः अपि बिलं गत्वा, तत्र भस्मीकृतान् पितॄन् दृष्ट्वा, साश्रुः तेभ्यः अञ्जलिं दित्सुः चरन् तुरङ्गमं लेभे ।
- तात्पर्य्यम् – अंशुमान् पितृव्यान् अन्विष्यन् सगरपुत्रैः निखातं गर्तं प्राप्य, ततः पातालं प्रविश्य, तत्र दग्धान् तान् वीक्ष्य बाष्पसहितः तेभ्यः तर्पणं दातुमिच्छन् यदा अटति स्म, तदा तत्रैव अश्वं प्राप्तवान् ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education

# सोऽपि गत्वा बिलं तत्र दृष्ट्वा भस्मीकृतान्पितॄन्।
# साश्रुस्तेभ्योऽञ्जलिं दित्सुश्चरंल्लेभे तुरङ्गमम्॥७२॥

- साश्रुः – अश्रुभिः सह विद्यते इति । उकारान्तः पुं, १.१
- दित्सुः – दातुम् इच्छुः – दा + सन् + उ (कृत्) – उकारान्तः, पुं, १.१
- चरन् + लेभे = चरँल्लेभे – परसवर्णसन्धिः

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education

# मातुलो गरुडस्तेषामेनं तत्रैवमब्रवीत्।
# गङ्गामिहानयायुष्मन्नेषामेषा गतिः परा॥७३॥

- मातुलः, गरुडः, तेषाम्, एनम्, तत्र, एवम्, अब्रवीत्, गङ्गाम्, इह, आनय, आयुष्मन्, एषाम्, एषा, गतिः, परा
- अब्रवीत् = उक्तवान्
- कः अब्रवीत्? मातुलः = मातुः भ्राता
- केषां मातुलः? तेषाम् = सौमतेयानाम्
- किन्नामा मातुलः? गरुडः = वैनतेयः

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education...

# मातुलो गरुडस्तेषामेनं तत्रैवमब्रवीत्।
# गङ्गामिहानयायुष्मन्नेषामेषा गतिः परा॥७३॥

- कम् अब्रवीत्? एनम् = अंशुमन्तम्
- कुत्र अब्रवीत्? तत्र = पाताले
- कथम् अब्रवीत्? एवम् = इत्थम्
- आयुष्मन्! = चिरञ्जीविन्!
- आनय = प्रापय
- काम् आनय? गङ्गाम् = देवनदीं मन्दाकिनीम्

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskritam - Value Education

# मातुलो गरुडस्तेषामेनं तत्रैवमब्रवीत्।
# गङ्गामिहानयायुष्मन्नेषामेषा गतिः परा॥७३॥

- कुत्र आनय? इह = अस्मिन् प्रदेशे
- किमर्थम् आनय? परा गतिः = परलोकप्रापिका
- का परा गतिः? एषा = गङ्गा
- केषां परा गतिः? एषाम् = तव पितॄणाम्

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education

# मातुलो गरुडस्तेषामेनं तत्रैवमब्रवीत्।
# गङ्गामिहानयायुष्मन्नेषामेषा गतिः परा॥७३॥

- अन्वयः – तत्र तेषां मातुलः गरुडः एनम् एवम् अब्रवीत् – आयुष्मन्! गङ्गाम् इह आनय, [यतः] एषा एषां परा गतिः ।
- तात्पर्य्यम् – तस्मिन् समये सुमतेः भ्राता गरुडः तत्रागत्य अंशुमन्तम् इत्थम् अकथयत् – "भोः चिरञ्जीविन्! देवनदीं मन्दाकिनीं पातालम् आनय, सा एव एतेषां तव पितॄणां सद्गतिं दातुं समर्था" ।

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskritam · Value Education

# मातुलो गरुडस्तेषामेनं तत्रैवमब्रवीत्।
# गङ्गामिहानयायुष्मन्नेषामेषा गतिः परा॥७३॥

- मातुलः – मातुः भ्राता । “पितुर्भ्राता पितृव्यः स्यात् मातुर्भ्राता तु मातुलः” (अमरः)
- गरुडः – “गरुत्मान् गरुडः ताक्ष्यों वैनतेयः खगेश्वरः” (अमरः)
- इह – अव्ययम् । इदम् + ह (सप्तम्यर्थे तद्धितः)
- आयुष्मन् – आयुः अस्य अस्ति – आयुस् + मतुप् । तकारान्तः, पुं, सम्बोधनप्रथमा, १

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskritam - Value Education - Technology

# ततस्तनयवृत्तान्तं श्रुत्वा लब्धतुरङ्गमः।
# समाप्य सगरः सत्रं पुत्रशोकाद्दिवं गतः॥७४॥

- ततः, तनय-वृत्तान्तम्, श्रुत्वा, लब्ध-तुरङ्गमः, समाप्य, सगरः, सत्रम्, पुत्र-शोकात्, दिवम्, गतः
- ततः = तदनन्तरम्
- दिवं गतः = मृतः
- कस्मात् कारणात् दिवं गतः? पुत्रशोकात् = सुतमरणस्य दुःखात्
- कः दिवं गतः? सगरः

vyoma
॥वाचं धेनुमुपासीत॥
Samskrtam - Value Education - Technology

# ततस्तनयवृत्तान्तं श्रुत्वा लब्धतुरङ्गमः।
# समाप्य सगरः सत्रं पुत्रशोकाद्दिवं गतः॥७४॥

- किं कृत्वा दिवं गतः? समाप्य = पूरयित्वा
- किं समाप्य? सत्रम् = अश्वमेधयज्ञम्
- कथम्भूतः सन् सत्रं समाप्य? लब्धतुरङ्गमः = प्राप्ताश्वः
- किं कृत्वा दिवं गतः? श्रुत्वा = निशम्य
- कं श्रुत्वा? तनयवृत्तान्तम् = पुत्राणां वार्तां

ततस्तनयवृत्तान्तं श्रुत्वा लब्धतुरङ्गमः।
समाप्य सगरः सत्रं पुत्रशोकाद्दिवं गतः॥७४॥

- अन्वयः – ततः तनयवृत्तान्तं श्रुत्वा लब्धतुरङ्गमः सगरः सत्रं समाप्य पुत्रशोकात् दिवं गतः
- तात्पर्य्यम् – तदनन्तरम् (अंशुमति अश्वेन सह प्रत्यागते), सगरः सुतानां वार्तां श्रुत्वा, अश्वं प्राप्य अश्वमेधयज्ञं पूरयित्वा, सुतमरणस्य दुःखेन प्राणान् त्यक्तवान् ।

# ततस्तनयवृत्तान्तं श्रुत्वा लब्धतुरङ्गमः।
# समाप्य सगरः सत्रं पुत्रशोकाद्दिवं गतः॥७४॥

- तनयवृत्तान्तम् – तनयानां वृत्तान्तः, तम् । “वार्ता प्रवृत्तिः वृत्तान्तः” (अमरः)
- लब्धतुरङ्गमः – लब्धः तुरङ्गमः येन सः
- समाप्य – सम् + “आप्लृ व्याप्तौ” + ल्यप्
- सत्रम् – “सत्रमाच्छादने यज्ञे” (अमरः)
- दिवं – वकारान्तः स्त्री, दिव्-शब्दः, २.१ । “सुरलोको द्यो-दिवौ द्वे स्त्रियाम्” (अमरः)

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education

# अथांशुमानयं राज्यं चिराय परिपालयन्।
# दिलीपे न्यस्तभूभारस्तपस्तेपे हिमालये॥७५॥

- अथ, अंशुमान्, अयम्, राज्यम्, चिराय, परिपालयन्, दिलीपे, न्यस्त-भू-भारः, तपः, तेपे, हिम-आलये
- अथ = सगरे दिवङ्गते
- तपः तेपे = तपश्चर्यां चकार
- कुत्र तेपे? हिमालये = हिमवत्प्रदेशे
- कः तेपे? अयम् अंशुमान् = सगरस्य पौत्रः

# अथांशुमानयं राज्यं चिरायं परिपालयन्।
# दिलीपे न्यस्तभूभारस्तपस्तेपे हिमालये॥७५॥

- कीदृशः अंशुमान्? परिपालयन् = रक्षन्
- किं परिपालयन्? राज्यम् = कोसलम्
- कियत्कालं परिपालयन्? चिराय = बहुकालम्
- कथम्भूतः सन् तेपे? न्यस्तभूभारः = दत्त-राज्य-भारः
- कस्मिन् न्यस्तभूभारः? दिलीपे = स्वसुते

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education

# अथांशुमानयं राज्यं चिराय परिपालयन्।
# दिलीपे न्यस्तभूभारस्तपस्तेपे हिमालये॥७५॥

- अन्वयः – अथ अयम् अंशुमान् राज्यं चिराय परिपालयन् दिलीपे न्यस्तभूभारः हिमालये तपः तेपे ।
- तात्पर्य्यम् – सगरस्य मरणानन्तरं तत्पौत्रः अंशुमान् बहुकालं राज्यभारम् ऊढ्वा वार्द्धक्ये पुत्रं दिलीपं सिंहासने अभिषिच्य स्वयं हिमालयं गत्वा (गङ्गायाः आनयनार्थम्) तपश्चर्यां चकार ।

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskritam - Value Education ...

# अथांशुमानयं राज्यं चिराय परिपालयन्।
# दिलीपे न्यस्तभूभारस्तपस्तेपे हिमालये॥७५॥

- चिराय – अव्ययम् ।
- न्यस्तभूभारः – भुवः भारः । न्यस्तः भूभारः येन सः ।

# दिलीपेऽपि दिवं याते श्रुत्वा वृत्तं भगीरथः।
# अमर्त्यसरितं कर्तुं मेने मर्त्यतरङ्गिणीम्॥७६॥

- दिलीपे, अपि, दिवम्, याते, श्रुत्वा, वृत्तम्, भगीरथः, अमर्त्य-सरितम्, कर्तुम्, मेने, मर्त्य-तरङ्गिणीम्
- मेने = निश्चितवान्
- किं मेने? कर्तुम् = विधातुम्
- किं कर्तुम्? अमर्त्यसरितं = देवनदीं गङ्गाम्, मर्त्यतरङ्गिणीं = मानुषसरितम्
- कः मेने? भगीरथः = दिलीपस्य सुतः

दिलीपेऽपि दिवं याते श्रुत्वा वृत्तं भगीरथः।
अमर्त्यसरितं कर्तुं मेने मर्त्यतरङ्गिणीम्॥७६॥

- किं कृत्वा मेने? श्रुत्वा = निशम्य
- किं श्रुत्वा? वृत्तम् = पूर्वजानां चरितम्
- कदा मेने? दिवं याते = स्वर्गते
- कस्मिन् दिवं याते? दिलीपे अपि = स्वपितरि दिलीपे

# दिलीपेऽपि दिवं याते श्रुत्वा वृत्तं भगीरथः।
# अमर्त्यसरितं कर्तुं मेने मर्त्यतरङ्गिणीम्॥७६॥

- अन्वयः – दिलीपे अपि दिवं याते भगीरथः वृत्तं श्रुत्वा अमर्त्यसरितं मर्त्यतरङ्गिणीं कर्तुं मेने ।
- तात्पर्य्यम् – अंशुमतः अनन्तरं राज्यं परिपाल्य तत्पुत्रः दिलीपः अपि स्वस्य वार्द्धक्ये गङ्गां भुवमानेतुं तपः कृत्वा विफल एव दिवङ्गतः । तस्मिन् स्वर्गते तत्पुत्रः भगीरथः पूर्वजानां चरितं निशम्य देवनदीं गङ्गां मनुष्यलोकम् आनेतुं सङ्कल्पितवान् ।

दिलीपेऽपि दिवं याते श्रुत्वा वृत्तं भगीरथः।
अमर्त्यसरितं कर्तुं मेने मर्त्यतरङ्गिणीम्॥७६॥

- दिवं याते – सतिसप्तमी प्रयोगः
- अमर्त्यसरितम् – अमर्त्यानां सरित्, ताम्
- मेने – “मन ज्ञाने” – लिट्, प्रथम.१
- मर्त्यतरङ्गिणीम् – मर्त्यानां तरङ्गिणी, ताम् । “नदी सरित् । तरङ्गिणी शैवलिनी तटिनी ह्रादिनी धुनी” (अमरः)

ततो गोकर्णमासाद्य तपस्यति भगीरथे।
देवो देवापगां वोढुमन्वमंस्त दयानिधिः॥७७॥

- ततः, गोकर्णम्, आसाद्य, तपस्यति, भगीरथे, देवः, देव-आपगाम्, वोढुम्, अन्वमंस्त, दया-निधिः
- ततः = भगीरथस्य निश्चयानन्तरम्
- अन्वमंस्त = अङ्गीचकार
- कः अन्वमंस्त? देवः = शिवः
- कीदृशः देवः? दयानिधिः = करुणासागरः

ततो गोकर्णमासाद्य तपस्यति भगीरथे।
देवो देवापगां वोढुमन्वमंस्त दयानिधिः॥७७॥

- किं कर्तुम् अन्वमंस्त? वोढुम् = धर्तुम्
- कां वोढुम्? देवापगाम् = देवनदीं गङ्गाम्
- कदा अन्वमंस्त? तपस्यति = तपश्चरति सति
- कस्मिन् तपस्यति? भगीरथे
- किं कृत्वा तपस्यति? आसाद्य = प्राप्य
- कम् आसाद्य? गोकर्णम् = गोकर्णक्षेत्रम्

Vyoma ॥ वाचं धेनुमुपासीत ॥ Samskritam - Value Education - Technology

ततो गोकर्णमासाद्य तपस्यति भगीरथे।
देवो देवापगां वोढुमन्वमंस्त दयानिधिः॥७७॥

- अन्वयः – ततः भगीरथे गोकर्णम् आसाद्य तपस्यति, दयानिधिः देवः देवापगां वोढुम् अन्वमंस्त ।
- तात्पर्य्यम् – एवं निश्चित्य भगीरथः गोकर्णक्षेत्रं प्राप्य चिरं तपश्चचार । तस्य तपसा प्रीतः करुणानिधिः शिवः देवनदीं गङ्गां स्वस्य जटासु धर्तुम् अङ्गीचकार ।

# ततो गोकर्णमासाद्य तपस्यति भगीरथे।
# देवो देवापगां वोढुमन्वमंस्त दयानिधिः॥७७॥

- आसाद्य – आ + षद्लृ विशरण-गति-अवसादनेषु" + णिच् + ल्यप्
- तपस्यति – तपस् + क्यङ् + शतृ । तकारान्तः, पुं, ७.१
- वोढुम् – वह् + तुमुन्
- अन्वमंस्त – अनु + "मन ज्ञाने" – लुङ्, प्रथम.१
- दयानिधिः – दयायाः निधिः

Vyoma
॥ वाचं धेनुमुपासीत ॥
Samskrtam · Value Education · Technology

# सङ्क्षेपः

- सगरः अश्वान्वेषणार्थं अंशुमन्तं प्रेषयामास
- अंशुमान् पातालं गत्वा अश्वं लब्ध्वा दग्धान् पितॄन् पश्यति
- गङ्गां पातालमानेतुं गरुडेन उक्तः अंशुमान्
- यज्ञं समाप्य दिवङ्गतः सगरः – अंशुमतः दिलीपस्य च प्रयत्नः
- भगीरथनिश्चयः – गोकर्णे तपः – शिवस्य अनुग्रहः






QUESTIONS/DOUBTS?

Email us @

sanskritfromhome@vyomalabs.in








- For downloading course-materials, login @ www.sanskritfromhome.in
- Subscribe to our youtube channel @ vyoma-samskrta-pathasala
- Buy our Samskrita-learning products @ www.digitalsanskritguru.com
- Support our cause for Samskrita-Samskriti @ www.vyomalabs.in